॥ श्रीत्रिपुरसुन्दरी विजयस्तवः ॥

॥ क॥

कल्पान्तोदित-चण्ड-भानु-विलसद्-देह-प्रभा-मण्डिता
कालाम्भोद-समान-कुन्तल-भरा कारुण्य-वारां निधिः ।
काद्यर्णाङ्कित-मन्त्र-राज-विलसत्-कूट-त्रयोपासिता
श्रीचक्राधि-निवासिनी विजयते श्रीराज-राजेश्वरी ॥ १॥

॥ ए॥

एतत्-प्राभव-शालिनीति निगमैरद्याप्यनालोचिता
हेमाम्भोज-मुखी चलत्-कुवलय-प्रस्पर्धमानेक्षणा ।
एणाङ्कांश-समान-फाल-फलक-प्रोल्लासि-कस्तूरिका
श्रीचक्राधि-निवासिनी विजयते श्रीराज-राजेश्वरी ॥ २॥

॥ ई॥

ईषत्-फुल्ल-कदम्ब-कुण्डल-महा-लावण्य-गर्वापहा
स्निग्ध-स्वच्छ-सुदन्त-कान्ति-विलसन्मन्द-स्मिताऽलंकृता ।
ईशित्वाद्यखिलेष्ट-सिद्धि-फलदा भक्त्या नतानां सदा
श्रीचक्राधि-निवासिनी विजयते श्रीराज-राजेश्वरी ॥ ३॥

॥ ल॥

लक्ष्यालक्ष्यावलग्न-देश-विलसद्-रोमावली-वल्लरी
वृत्त-स्निग्ध-फल-द्वय-भ्रम-करोत्तुङ्ग-स्तनी सुन्दरी ।
रक्ताशोक-शुभ-प्रपाटल-दुकूलाच्छादिताङ्गी मुदा
श्रीचक्राधि-निवासिनी विजयते श्रीराज-राजेश्वरी ॥ ४॥

॥ ह्रीं॥

ह्रींङ्कारी सुर-वाहिनी जल-गभीरावर्तनाभिर्धन-
श्रोणी-मण्डल-भार-मन्द गमना-काञ्ची-कलापोज्ज्वला ।
शुण्डादण्ड-सुवर्ण-वर्ण-कदली-काण्डोपमोरु-द्वयी
श्रीचक्राधि-निवासिनी विजयते श्रीराज-राजेश्वरी ॥ ५॥

॥ ह॥

हस्त-प्रोज्ज्वलदिक्षु-कार्मुक-लसत्-पुष्पेषु-पाशांकुशा
ह्याद्यर्णाङ्कित-मन्त्र-राज-निलया हारादिभिर्भूषिता ।
हस्त-प्रान्त-रणत्-सुवर्ण-वलया हर्यक्ष-सम्पूजिता
श्रीचक्राधि-निवासिनी विजयते श्रीराज-राजेश्वरी ॥ ६॥

॥ स॥

संरक्ताम्बुज-पाद-युग्म-विलसन्मञ्जु-क्वणन्नूपुरा
संसारार्णव-तारणैक-तरणिर्लावण्य-वारां निधिः ।
लीला-लोल-तमं शुकं मधुरया संलालयन्ती गिरा
श्रीचक्राधि-निवासिनी विजयते श्रीराज-राजेश्वरी ॥ ७॥

॥ क॥

कल्याणी करुणा-रसार्द्र-हृदया कल्याण-सन्दायिनी
काद्यर्णाङ्कित-मन्त्र-लक्षित-तनुस्तन्वी तमो-नाशिनी ।
कामेशाङ्क-विलासिनी कल-गिरामावास-भूमिः शिवा
श्रीचक्राधि-निवासिनी विजयते श्रीराज-राजेश्वरी ॥ ८॥

॥ ह॥

हन्तुं दानव-पुङ्गवं रण-भुवि प्रोच्चण्ड-भण्डाभिधं
हर्यक्षाद्यमरार्थिता भगवती दिव्यां तनूमाश्रिता ।
श्रीमाता ललितेत्यचिन्त्य-विभवैर्नाम्नां सहस्रैः स्तुता
श्रीचक्राधि-निवासिनी विजयते श्रीराज-राजेश्वरी ॥ ९॥

॥ ल॥

लक्ष्मीर्वाग-गजादिभिर्बहु-विधैः रूपैः स्तुताऽपि स्वयं
नी-रूपा गुण-वर्जिता त्रि-जगतां माता च चिद्-रूपिणी ।
भक्तानुग्रह-कारणेन ललितं रूपं समासादिता
श्रीचक्राधि-निवासिनी विजयते श्रीराज-राजेश्वरी ॥ १०॥

॥ ह्रीं॥

ह्रीङ्कारैक-परायणार्त-जनता-संरक्षणे दीक्षिता
हार्दासं तमसं व्यपोहित-मलं भूष्णुर्हर-प्रेयसी
हत्यादि-प्रकटाघ-सङ्घ-दलने दक्षा च दाक्षायणी

श्रीचक्राधि-निवासिनी विजयते श्रीराज-राजेश्वरी ॥ ११॥

॥ स॥

सर्वानन्द-मयी समस्त-जगतामानन्द-सन्दायिनी
सर्वोत्तुङ्ग-सुवर्ण-शैल-निलया सा सार-साक्षी सती ।
सर्वैर्योगि-चयैः सदैव विचिता साम्राज्य-दान-क्षमा
श्रीचक्राधि-निवासिनी विजयते श्रीराज-राजेश्वरी ॥ १२॥

॥ क॥

कन्या-रूप-धरा गलाब्ज-विलसन्मुक्ता-लताऽलंकृता
कादि-क्षान्तमनु-प्रविष्ट-हृदया कल्याण-शीलान्विता ।
कल्पान्तोद्भट-ताण्डव-प्रमुदिता श्रीकाम-जित्-साक्षिणी
श्रीचक्राधि-निवासिनी विजयते श्रीराज-राजेश्वरी ॥ १३॥

॥ ल॥

लक्ष्या भक्ति-रसार्द्र-हृत्-सरसिजे सद्भिः सदाऽऽराधिता
सान्द्रानन्द-मयी सुधाकर-कला खण्डोज्ज्वलन्मौलिका ।
शर्वाणी शरणागताऽऽर्ति-शमिनी सच्चिन्मयी सर्वदा
श्रीचक्राधि-निवासिनी विजयते श्रीराज-राजेश्वरी ॥ १४॥

॥ ह्रीं॥

ह्रीङ्कार-त्रय-सम्पुटाऽति-महता मन्त्रेण सम्पूजिता
होत्री चन्द्र-समीरणाऽग्नि-जल-भू-भास्वन्नभो-रूपिणी ।
हंसः सोहमिति प्रकृष्ट-धिषणैराराधिता योगिभिः
श्रीचक्राधि-निवासिनी विजयते श्रीराज-राजेश्वरी ॥ १५॥

॥ श्रीं॥

श्रीङ्काराम्बुज-हंसिकाऽऽश्रित-जन-क्षेमङ्करी शङ्करी
शृङ्गारैक-रसाकरस्य मदनस्योज्जीविका-वल्लरी ।
श्रीकामेशरहः-सखी च ललिता श्रीमद्-गुहाऽऽराधिता
श्रीचक्राधि-निवासिनी विजयते श्रीराज-राजेश्वरी ॥ १६॥

इति ।